श्रीः

हरिदास-संस्कृत-ग्रन्थमाला

६६

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः

'दीधिति' विवृत्या विभूषितः

टीकाकारः—

पं० श्री बदरीनाथ झा

( कविशेखर )

मूल्यं ५)

THE

HARIDAS SANSKRIT SERIES

66

# THE

# DHVANYĀLOKA

OF

ĀNANDAVARDHANĀCHĀRYA

*Edited*

## WITH THE DĪDHITI COMMENTARY

INTRODUCTION, INDEX ETC.,

By

*Kavis'ekhara Pandit Badari Nāth S'armā*

PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhambâ Sanskrit Series Office.*

Benares City.

1937

* श्रीः *

हरिदास-संस्कृत-ग्रन्थमाला

६६

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः ।

मुजफ्फरपुरराजकीयसंस्कृतमहाविद्यालयसाहित्यप्रधानाध्यापकेन

मैथिलश्रोत्रियकविशेखरपण्डितश्रीबदरीनाथशर्मणा

निर्मितया 'दीधिति' विवृत्या विभूषितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः-

चौखम्बा संस्कृत सीरीज़ आफिस,

बनारस सिटी ।

१९९४

# भूमिका ।

अये सुधीसहृदयधौरेयाः साहित्याम्भोधिनिष्णाताः !

कीर्तिचतुर्वर्गादिप्रयोजकस्य सहृदयहृदयाह्लादिनः शब्दार्थमयस्य (१)काव्यस्य कायस्य जीवितमिव सारभूतं व्यक्तिमात्रावलम्बेन गुणीकृताभ्यां शब्दार्थाभ्यां मध्यमानादेन शाब्दिकाङ्गीकृतं स्फोटमिव स्फुटीक्रियमाणं वस्त्वलङ्काररसादिरूपतया त्रिशाखमपि रसादिप्रधानं ध्वनिमभाववादेन, भाक्तत्वोपन्यासेन, ब्रह्मतत्त्ववदनिर्वचनीयताऽऽख्यानेन, समासोक्त्याद्यर्थालङ्कारान्तर्भावनेन, गुणवत्संघटनाऽऽत्मकरीतिलक्षणताऽङ्गीकारेण, वक्रोक्त्यन्तर्निपातनेन, परामर्शप्रभवसंविद्विषयत्वव्यवस्थापनेन च विविधाभिर्भङ्गिभिः खण्डयतां प्रतिपक्षिप्राचीनविपश्चितां मतं ध्वनिस्थापनयाऽपाचिकीर्षुः सुगृहीतनामधेयो राजानकानन्दवर्धनाचार्यः साहित्याध्वन्यालोकमादधानं 'ध्वन्यालोक'समभिधानं ध्वनिग्रन्थमिमं प्रथमं प्राणैषीत् ।

इह च प्रथमोद्द्योते—ध्वनिस्वरूपनिरूपणं प्रतिज्ञाय तदभाव–भाक्तत्वानिर्वाच्यत्ववादिनां मतं निराकृतम्, ध्वनिं लक्षयित्वा समासोक्त्याद्यलङ्कारानन्तर्भावश्च दर्शितः । द्वितीयोद्द्योते—व्यङ्ग्यमुखेन ध्वनेः प्रभेदानां लक्षणोदाहरणानि प्रकाशयता रसादिध्वनि–रसवदाद्यलङ्काराणां मिथो वैलक्षण्यं परिपन्थिस्मयमन्थनपूर्वकं व्यवस्थाप्य गुणा निरूपिताः । तृतीयोद्द्योते—पुनर्व्यञ्जकमुखेन ध्वनेः प्रकारान् सपरिकरं निरूपयता रीतीर्वृत्तींश्च प्रदर्श्य भाट्ट–प्राभाकर-तार्किक–वेदान्ति–बौद्धादिनयेष्वपि व्यक्तिः स्थापिता । तुरीयोद्द्योते च—ध्वनिसम्बन्धेन प्रागुक्तानामप्यर्थानामपूर्वत्वं निदर्श्य, कविप्रतिभाऽऽनन्त्यं ध्वनिप्रयोजनान्तरं प्रकटयता शान्तादिरसानां भारतादिप्रबन्धव्यङ्ग्यतां व्यवस्थापयता सप्रबन्धनामनिर्देशमुपसंहारो विहितः ।

अत्र हि ध्वनिशब्देन बहुत्र गुणीभूतशब्दार्थनिष्ठव्यक्तिप्रयोज्यबोधविषयप्रधानीभूतार्थस्य, कुत्रापि तदर्थव्यञ्जनक्षमशब्दार्थयोः, क्वचित् तादृशार्थबोधनव्यापारस्य च परामर्शः । भक्तिपदेन शुद्धगौणलक्षणयोः, लक्षणापदेन तु गौणलक्षणामा-

---

(१) एतन्मदीयसाहित्यसारिण्यां स्फुटम् ।

त्रस्य प्रतीतिः । शब्दशक्त्युद्भवध्वनेरलङ्कारमात्ररूपतयैकविधत्वमेव । शब्दार्थोभयशक्त्युद्भवध्वनिरप्युपपत्त्यैवोहनीयः । काव्यस्य मुख्यतया ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्वावेव प्रकारौ, चित्रं तु गौणः प्रभेदः । सर्वापेक्षया ध्वनेः प्राधान्यम्, तत्रापि विशेषेण रसादिलक्षणस्य । लेखशैली च पातञ्जलमहाभाष्यादिवत् पुनःपुनरुपात्तविषयोपपादिका नितरामुत्तानप्रायाभिप्रायाऽपि गभीराशया प्रबन्धप्राचीनतरत्वं द्योतयति । ध्वनेः सर्वतः प्रथमं लक्षणस्य प्रवर्तकत्वाद् ग्रन्थकृदयं ध्वनिकारसञ्ज्ञासम्मानस्य भूमिः । लक्ष्यन्तु महर्षिवाल्मीकि–द्वैपायनादिभिरेव प्रसेधितम् । अत एव 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इतिकारिकायां निगमप्ररूढानादिपारम्परिकप्रसिद्धेः सूचयिता समाम्नातशब्द उपक्रम एव प्रयुक्तः ।

ग्रन्थोऽयं कारिकारूपो ध्वनिनामा,परिकरश्लोक–सङ्ग्रहश्लोक–सङ्क्षेपश्लोकघटित–वृत्तिरूपश्चालोकनामेतिभागद्वयभाक्, ध्वन्यालोकः सहृदयालोकः काव्यालोकश्चेतिसंज्ञात्रयभाक् च । तत्र कारिकाग्रन्थस्याद्यमङ्गलराहित्येन, कारिकावृत्त्योः प्रतिपाद्यविषयैक्येन, ध्वनिग्रन्थकृन्नाम्नः पृथगनुपलम्भेन जल्हणगुम्फितायां सूक्तिमुक्तावलौ—

'ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना ।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ? ॥' इति राजशेखरीयपद्यस्य दर्शनाद्, व्यक्तिविवेके महिमभट्टेनोभयो(१)रविभागेनैव खण्डनात्, सूरिकल्हण–हेमेन्द्र–क्षेमेन्द्र–जयरथ–विश्वनाथ–गोविन्द–कुमारस्वामिप्रभृतिनिबन्धृमतानुकूल्यात्, समुद्रबन्धस्य काव्यपञ्चकोपपादितसिद्धान्ताच्च कारिकावृत्तिग्रन्थयोः प्रणेताऽऽनन्दवर्धन एवैक इति पौरस्त्या विपश्चितो निश्चिन्वन्ति ।

'जैकोवी'प्रभृतयः पाश्चात्त्यास्तु 'अत एव मूलकारिका तन्निराकरणार्थो न श्रूयते, वृत्तिकृत्तु निराकृतमपि प्रमेयसङ्ख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति ।' इति ( निर्णयसागरे पूर्वं मुद्रितस्य लोचनस्य ५९ पृष्ठे ) 'तेनात्र प्रथमोद्द्योते ध्वनेः

---

( १ ) कारिकावृत्त्योः ।

सामान्यलक्षणमेव कारिकाकारेण कृतम्, द्वितीयोद्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्योते मूलविभागमवोचत्।' इति (५९ पृष्ठे) 'न चैतन्मयोक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—' इति (६० पृष्ठे) 'भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेति भावः।' इति (६० पृष्ठे) 'एतत् तावत् त्रिभेदत्वं न कारिकाकारेण कृतम्, वृत्तिकारेण तु दर्शितम्।' (इति १२३ पृष्ठे) च लोचनस्य दर्शनान्मम्मटादिस्वरसानुसन्धानाच्च कारिकावृत्तिकर्त्रोर्भेदं प्रतिपादयन्ति।

एवं सति यदा कारिकावृत्तिकृतोर्भेदः, तदा कारिकाकारो ध्वनिकारातिरिक्तनाम्ना सर्वैरपरिचित एव। अत एव तदीयः समयोऽपि विशेषेण निर्धारयितुमशक्यः। सामान्यतस्तु दण्डिभामहोद्भटादिभ्यः सप्तमादिशताब्दयुद्भूतेभ्योऽर्वाचीनः नवमशताब्दीसमुत्पन्न–वृत्तिकृतश्च प्राचीनो ध्वनिकार इत्युच्यते। वृत्तिकारस्य परिचयस्त्वनुपदं वितीर्यते। यत्तु दाक्षिणात्यः शोभनकविः सहृदयमेव ध्वनिकारमुररीचकार, तन्न, 'सहृदयमनःप्रीतये' इत्यादिकारिकाघटकसहृदयशब्दस्य तदाख्यानबीजभूतस्य विदग्धपरताया एव सकलसुधीसम्मतत्वात्।

अभेदे तु राजानकोपाधिरानन्दवर्धनाचार्यः काश्मीरिक–भूसुरवंशावतंसस्य भट्टनोणस्य (१)तनयः ख्रैष्टनवमशताब्द्या उत्तरार्धे(२) तन्त्रसाहित्यरत्नखनिं कश्मीरावनिं शासतोऽवन्तिवर्मनृपतेः सभापण्डित आसीदिति राजतरङ्गिणीतो जैकोबी–बुल्नराभ्यां निर्धारितम्। तदेव काव्यप्रकाशव्याख्यातुर्वामनाचार्यस्यापि सम्मतम्। 'यस्मिन्नस्ति न वस्तु किञ्चन' इत्यादिध्वनिखण्डनपरवृत्तिघटकपद्यस्य प्रणेता मनोरथनामा कविरप्यानन्दवर्धनस्य समानकालिक एवेति तत्रत्यलोचनान्मतिगोचरीभवति। आलङ्कारिकशिरोमणिरयं निखिलेषु दर्शनेषु परमां प्रौढिं बिभ्राणोऽपि व्याकरणे निरतिशयं पक्षपातमवाक्षीदित्यपि तत्तन्मतनिराकृतिपरसन्दर्भेभ्यः(३) 'प्रथ-

---

(१) क्वचित्तु 'जोन' इति तन्नाम। (२) ख्रैष्ट ८५५ तः ८८४ वर्षं यावत्।
(३) व्यञ्जनास्थापनप्रसङ्गे।

मे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्' इति(१) वृत्तिग्रन्थाच्चावसातुं न दुश्शकम् ।

आनन्दवर्धनाचार्यविरचितप्रबन्धेषु ध्वन्यालोकः, देवीशतकम्, विषमबाणलीला ( प्राकृतभाषामयी ), अर्जुनचरितम्, धर्मोत्तमानाम्न्या विनिश्चयटोकाया विवृतिः, इतिपञ्चानां नामान्याकर्ण्यन्ते । तेषु ध्वन्यालोक-देवीशतके काव्यमालायां मुद्रिते, विषमबाणलीलाऽर्जुनचरिते क्वचित् क्वचिद् ध्वन्यालोक एवोद्धृतनामनी, धर्मोत्तमाविवृतिस्तु तृतीयोद्द्योतान्त(२)वृत्तिगम्या तल्लोचनेन स्फुटीकृता ।

किञ्च ध्वन्यालोके—'अर्जुनचरितम्' 'कादम्बरी' 'कुमारसम्भवम्' 'तापसवत्सराजम्' 'नागानन्दम्' 'भारतम्' 'मधुमथनविजयम्' 'रत्नावली' 'रामाभ्युदयम्' 'रामायणम्' 'विषमबाणलीला' 'वेणीसंहारम्' 'सेतुबन्धम्'(३) 'हरिविजयम्'(४) 'हर्षचरितम्' इत्येतेषां प्रत्नानां ग्रन्थरत्नानाम्, 'अमरुकः' 'आदिकविबाल्मीकिः' 'उद्भटः' 'कालिदासः' 'धर्मकीर्तिः' 'बाणः' 'भरतः' 'भामहः' 'व्यासः' 'सर्वसेनः' इत्यमीषां प्रबन्धॄणां च नामान्युपलभ्यन्ते । तत्र भट्टभामहः खैष्टाष्टमशताब्द्यां कश्मीरावनिमण्डलं मण्डयामास । एतदीयदेवीशतकव्याख्याऽन्ते महाभाष्यप्रदीपकृत्कैयटश्च ग्रन्थसमाप्तिसमयं ९७७ तमं खैष्टाब्दमाख्यत् । ध्वन्यालोकलोचनकारोऽभिनवगुप्तोऽपि स्वरचित 'प्रत्यभिज्ञाविमर्षिणी' समाप्तौ—

'इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे,

तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।' इत्यादिपद्यं निगद्य खैष्टदशमशताब्द्यवसानं स्वसमयमुल्लिलेख। दशमशताब्दीसमुद्भूतो राजशेखर एकादशशताब्दीसमुद्भूतो हेमेन्द्रः क्षेमेन्द्रश्च स्वस्वप्रबन्धेषु सश्लाघं राजानकानन्दवर्धनं प्रामाणिकत्वेन स्वीचकार। एतावताऽप्यानन्दवर्धनस्य नवमशताब्दी स्थितिकाल इति निश्चेतुं शक्यम् ।

---

(१) ध्वनिलक्षणप्रकरणे । (२) 'यत्त्वनिर्देश्यत्वम्' इत्यादिना ।
(३) प्राकृतमहाकाव्यम् । (४) सर्वसेनकृतम् ।

यत्तु भरतसूत्रटीकायाम् 'अस्मद्गुरवः' इत्यभिनवगुप्तस्यानन्दवर्धनोल्लेखिलेखमवलोक्य समसामयिकत्वमुभयोः पिशेल्महाशयेन संशयितम् ; तन्न, गुरुत्वस्य परम्परया कालभेदेऽपि सारस्वतमहत्त्वख्यापनाय वक्तुं शक्यत्वात्, उभयोः समानकालिकत्व एकतरसम्बन्धिग्रन्थस्यापरेण सश्रद्धं व्याख्यातुमनौचित्याच्च ।

ध्वन्यालोकस्य चन्द्रिका लोचनं चेतिटीकाद्वयं श्रूयते । तत्र चन्द्रिका नेदानीमुपलभ्यते, किन्तु—

'किं लोचनं विनाऽऽलोको भाति चन्द्रिकयाऽपि हि ।
तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥' इति तृतीयोद्द्योतान्तलोचनश्लोकात्, 'यस्तु व्याचष्टे' इत्युपष्टभ्य 'इत्यलं निजपूर्वजसगोत्रैः(१) साकं विवादेन ।' इतितृतीयोद्द्योतस्यारम्भे, 'चन्द्रिकाकारस्तु पठितमनुपठतीतिन्यायेन गजनिमीलिकया व्याचचक्षे' इत्युपक्रम्य 'इत्यलं पूर्ववंश्यैः सह विवादेन बहुना ।' इति ( १८५ पृष्ठे ) तन्मध्ये लोचनलेखाच्च केवलमुन्नीयते ।

लोचनन्तु खैष्टदशमशताब्द्यवसाने कश्मीराख्यजनपदनिवासिना भट्टतौतादि(२) गुरुत्रयीशिक्षितेन वराहगुप्तस्य पौत्रेण चुखलस्य तनुजन्मना मनोरथ(३)गुप्तस्याग्रजेन कर्मक्षेमराजादिगुरुणा महामाहेश्वराचार्याभिनवगुप्तेन विरचितं तृतीयोद्द्योतान्तं(४) मोहमयीनगरे निर्णयसागरमुद्रणागारे मुद्रितञ्च ।

अथास्य ध्वन्यालोकस्य प्रथममुद्रणावसरे परिशुद्धादर्शपुस्तकानुपलब्धेस्त्रुटीरशुद्धीश्च पठन-पाठनपरायणानामरुन्तुदा नितरामाकलय्य लोचनं च प्राचीनतमक्रमनिबद्धतयाऽऽधुनिकधीगोचरतामनासादयदवधार्य कतिपयैः सुहृद्भिरन्तेवासिभिश्च समुत्साह्यमानः कामपि सरलां विवृतिं नूतनया भङ्ग्या विरचयितुं चिराद् विचा-

---

(१) चन्द्रिकाकारोऽभिनवगुप्तस्य पूर्ववंश्य इत्यप्यतो ज्ञायते ।

(२) आदिपदेन लक्ष्मणगुप्त-भट्टेन्दुराजयोः सङ्ग्रहः ।

(३) आनन्दवर्धनसमकालिकमनोरथकवेरयं भिन्नः, कालभेदात् ।

(४) तच्चतुर्थोद्द्योतस्तु 'कलकत्तायूनिवर्सीटीजर्नल'पत्रादुपलब्धः ।

रयन् १९२८ खैष्टाब्दे साहायकसामग्रीविरहेऽपि कथञ्चन दीधितिसमभिधानां विवृतिमेतां सामि विरचय्य राजकीय–विहारोत्कलसंस्कृतसमितेः शास्त्रविचारपरिषदे निबन्धपरीक्षाप्रसङ्गेन समर्प्य प्रधानं पारितोषिकं चावाप्य किञ्चित्सफलप्रयत्नम्मन्यो दीधितिं पूरयितुमुदयंसिषम् , श्री १०८ राधागोविन्दानुग्रहेणैषमः पूर्णामकार्षं च ।

यद्यपीह लोचनप्रतिपादितानेव पदार्थान् प्रायेणोपादाम् , क्वचित्तु सन्दर्भशुद्ध्यनुरोधात् सिद्धान्ताभिनवीभावात् , तदनुपलम्भाच्च नूतनां पद्धतिमाशिश्रियम् , तथाऽपि भूयांसि स्खलितानि संशयानो महाशयांस्तान्यपोहितुमूहकुशलान् सङ्ख्यावतो विदग्धमूर्धन्यानभ्यर्थये ।

एतत्सम्बन्धे विहारोत्कलसंस्कृतसमितेर्भूतपूर्वकार्यसम्पादकानां सारस्वतमहामहिम्नां स्वर्गातिथीनां सुरेन्द्रनाथ ( मजुमदार, एम्.ए,पी.आर.एस. ) शास्त्रिणां, मान्यवराणां तेजनारायण ( जुब्ली ) महाकलाशालाप्रधानाध्यक्षाणां (डाक्टर) श्री हरिचन्द्र ( आइ. ई. एस्. ) शास्त्रिणां, समृद्धश्रद्धासम्मानभाजनानां महामहोपाध्यायानां कर्मकाण्डप्रधानाचार्यपण्डितश्रीमुकुन्द (झा, बख्शी) शर्मणां च प्रोत्साहनजन्यमुपकारमपारं प्रत्युपकर्तुमसमर्थः परमाचेतनं स्मरिष्यामि । अन्तेवासिषु चायुष्मतः साहित्याचार्यस्य श्रीवेचनशर्मणः, श्रीदरवारिशर्मणः, साहित्यशास्त्रिणः, श्रीश्यामानन्दशर्मणश्च पूर्वपत्रसंशोधनादिसाहाय्योपकृतिमविस्मरँस्तानाशिखं शुभाशिषां राशिना योजयामि ।

स चायं दीधितिविवृतिविशदीकृतो मुद्रणाय वितीर्णसर्वाधिकारो ध्वन्यालोकः सर्वविधसंस्कृतपुस्तकमुद्रणानवरतप्रबद्धपरिकरेण वाराणसेयचौखम्बासंस्कृतपुस्तकालयाधिपतिना श्रेष्ठिश्रीजयकृष्णदासगुप्तेन स्वकीये विद्याविलासनाम्नि मुद्रणालये सम्मुद्र्य प्रकाशित इति तदीयेनाप्युपकारभरेण प्रेर्यमाणस्तस्मै शतमाशिषो वितरामीति—

कौमुदीमहोत्सवः<br>२—११—३७

विनीतो निवेदयते—<br>**श्रीबदरीनाथः ।**

* श्रीः *

॥ श्रीकृष्णःशरणम् ॥

# अथ ध्वन्यालोकस्य विषयानुक्रमणिका ।

## प्रथमोद्द्योते–

विषयाः-

विषयाः-

## तृतीयोद्द्योते—

## चतुर्थोद्द्योते—

इति सदीधितिध्वन्यालोकस्य विषयानुक्रमणिका।

## काव्यप्रकाशः नागेश्वरीव्याख्यासहितः ।

अयि ! साहित्यतत्त्वमधिजिगमिषवो विपश्चितः !

इदं नाविदितचरं भवतां, यद्—विना मम्मटाचार्यप्राप्तप्रकाशं काव्यप्रकाशं; काव्यप्रकाशं लब्धुं न प्रभवः केऽपि कदा चिदपीति, किंचात एव सर्वत्रत्यासूत्तमासु परीक्षासु तत्तत्प्रबन्धकमहोदयैः पाठ्यत्वेन निर्धारितः स साहित्यमूर्धन्यो ग्रन्थः । परन्तु सम्प्रति परीक्षाऽर्थिनां विद्याऽर्थिनां कृते स्वल्पसमयेनैव झटिति संक्षेपतो ग्रन्थाशयग्रन्थिविमोचने प्रभुतरा व्याख्या काऽपि न दृग्गोचरीभूयत इतिचिन्ताऽऽकुलितमानसेभ्यो जनेभ्यः सहर्षं "नागेश्वरी" टीकया संवलितमुक्तग्रन्थं श्रीपण्डितहरिशङ्करशर्ममैथिलमहोदयो दृक्पथमवातारयत्, नूनमनेनोक्तचरव्याख्योपेतेन ग्रन्थेन भविष्यति स्वयमेवाध्येतॄणामध्यापकेन विनाऽपि परीक्षोपयोगिज्ञानमित्यत्र विदुषामनुभव इति वेदितव्यं तत्र भवद्भिः सादरमुक्त ग्रन्थं दिदृक्षुभिरिति । मूल्यम्—रू० ४)

## काव्यप्रकाशः सुधासागराख्यया व्याख्यया विभूषितः

अयि ! काव्यप्रकाशं सविशेषमधिजिगांसवो विपश्चिदपश्चिमा अन्तेवासिनः सुहृज्जनाश्च !

हन्त ! महदानन्दास्पदमिदमिदानीं प्रस्तूयते; श्रोतुमपि तन्मुहुर्मुहुरनुरुध्यन्ते कयत्कालमवधाय भवन्तः,

संप्रत्यसाम्प्रतं न भविष्यतीति; वर्त्तमानास्वपि विविधासु व्याख्यासु श्रीवाग्देवताऽवतारपदलाञ्छनेन श्रीमम्मटाचार्येण प्रणीतेऽधिकाव्यप्रकाशं; श्रीभीमसेनदीक्षितमहोदयेन व्याख्यातिलकं सुधासागराख्यं तिलकमिव समुद्भासितमिति सविशेषं विशेषं विद्वद्भिर्विद्वद्भिः प्रकाशनायानुशास्यमानेन मया तद्द्रष्टृवशंवदतया प्रकाशितः ।

आशास्यते चात्रत्यवैशिष्ट्यं विशिष्टपण्डितसंमतस्य वैमत्ये सत्यखण्डनीयंखण्डनमैकमत्ये तु सङ्कलनमविकलं; सुधावदधिकं सुधीजनमनोरञ्जनमवलोकितुं- प्रयतेरन् प्रायशः प्रत्ना नूत्ना अपि सन्तः प्रशंसन्तः सौष्ठवमेतदीयमिति,

किं चात्रत्येषु दिक्परिमितेषूल्लासेषु क्रमेण समुचितनिरूपणमेषामिति संक्षेपतऊह्यं, तद् यथा—१मे—काव्यलक्षणस्य तद्भेदानां च, २ये—शब्दार्थस्वरूपनिरूपणात्मकेऽभिधाऽऽदीनाम्, ३ये—अर्थव्यञ्जकतायाः, ४ र्थे—ध्वनेः, ५मे—ध्वनिगुणीभूतव्यङ्ग्यस्य व्यञ्जनास्थापनप्रभृतेश्च, ६ष्ठे—चित्राख्यकाव्यभेदस्य, ७मे—दोषाणाम्, ८मे—गुणानाम्, ९मे—शब्दालङ्काराणाम्, १०मे—अर्थालङ्काराणामिति ।

उक्तचरविषयमवलम्ब्य यादृशी विचारशैली प्रदर्शिता टीकाकारमहोदयैर्ग्रन्थकृदाशयवर्णनपुरःसरं तत्सर्वं भवत्पुरःसरमेव प्रकटीभविष्यतीत्यलं पल्लवितेन विज्ञवरेष्विति । मूल्यम्—रू० ५)

श्रीमदानन्दवर्धनाचार्यप्रणीतो

# ध्वन्यालोकः

मैथिलश्रोत्रियपण्डितश्रीबदरीनाथशर्मनिर्मितदीधितिविवृतिविलसितः ।

## प्रथम उद्द्योतः ।

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।**

ध्वनिवृत्तिकर्तृवाणीं, विषमां व्याख्यातुमुद्यतः सहसा ।
प्रयतः प्रणम्य वाणीं, करुणावरुणालयस्वान्ताम् ॥ १ ॥
महसाऽऽलिङ्गितमनिशं किमपि तमश्चारु चिन्तयन् कुतुकात् ।
रचयति बदरीनाथो ध्वन्यालोकस्य दीधितिं विवृतिम् ॥ २ ॥

अथ परमप्रशस्तपथाध्वनीनं ध्वनिनिबन्धं व्याचिख्यासुर्विदग्धविद्वच्चूडामणिस्तत्रभवान् राजानकानन्दवर्धनाचार्यः शिष्टाचारपरम्पराऽनुशिष्टं प्रारिप्सितप्रबन्धसमाप्तिप्रचारप्रतिबन्धकप्रत्यूहव्यूहमपोहयितुमाशीर्वादात्मकं मङ्गलं विधाय शिष्यशिक्षायै निबध्नाति—**स्वेच्छेति** । स्वेच्छया निजनैसर्गिकजगदवनसमीहया, यदृच्छया वा, न तु कृतकर्मवशेन परादेशेन वा, केसरिणः—सिंहस्य; मधुरिपोर्नारायणस्य नृहरेरितियावत् । स्वच्छया—अवदातया, स्वेषाम्—आत्मनाम्, छायया—कान्त्या, आयासितः साम्यासादनप्रयत्नं कारितः खेदितो, वा; इन्दुश्चन्द्रमा यैस्तादृशाः । प्रपन्नानां—शरणागतानां प्रह्लादप्रभृतीनाम् । अर्तिच्छिदः—पीड़ाहारिणः । नखाः, वो—युष्मान् व्याख्यातॄन् श्रोतॄंश्च, त्रायन्तां रक्षन्त्वित्यर्थः ।

तथाहि—'स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरिता चेति ते समाः' इति केशवः । 'छायात्वनातपे कान्तौ' इति वैजयन्ती । 'आयासो यत्नः क्लेशश्च' इति कल्पद्रुमः । 'चापाग्रपीडयोरर्तिः' इति शाश्वतश्च ।

त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः ॥

इह स्वेच्छाशब्दस्य विलक्षणैकार्थोपस्थापकत्वात् 'निजस्वात्मादिशब्दानां प्रधानक्रियाकर्त्रन्वयित्वम्' इति व्युत्पत्तिविरोधप्रयोज्यो नैवाभवन्मतयोगो दोषः। आतपाभाववाचित्व एव छायाशब्दस्य समासे "छाया बाहुल्ये" इति पाणिनिसूत्रेण क्लीबत्वस्य व्याख्यातृभिः सिद्धान्तितत्वान्न 'स्वच्छाये'त्यत्र तत्प्राप्तिः। सवर्णदीर्घेण स्वरूपाविपर्यासेऽपि प्रकृते क्लीबत्वमङ्गीकर्तुमसङ्गतम्, 'स्वच्छायया' इत्याचार्यव्याख्यानानुपपत्तेः। स्वच्छशब्दस्य धर्मिवाचकत्वेऽप्युक्तरीत्याऽन्वयसामञ्जस्ये धर्मपरताकल्पनं तु कस्यचिच्चिन्त्यम्। त्राणं च प्रकृतोपयोगितया ग्रन्थसमाप्तिप्रचारप्रतिभटप्रत्यवायशान्तिलक्षणं साहाय्याचरणम्। अतो नासङ्गतिः। भगवतः स्वेच्छाकेसरिता प्राकृतसिंहापेक्षिकं व्यतिरेकमलङ्कारम्, स्वाच्छन्द्यं द्वारीकृत्य परानियोज्यत्वेन परमैश्वर्यञ्च, मधुरिपुपदं खलनिग्राहकतां विक्रमविशेषञ्च, स पुनः प्रपन्नत्राणौचित्यम्, नखच्छायायाः स्वच्छता शशाङ्ककान्त्यपेक्षया वैलक्षण्यम्, तच्च तदासादनार्थमायासविधानोपपत्तिम्, इन्दुपदं स्वीययावत्सुषमासाम्राज्यशालित्वम्, तस्यापि साम्यासादनायासो नखानां शोभातिरेकस्यासौलभ्यमुखेन स्पृहणीयताम्, बहुत्वं प्रत्येकमपि त्राणसामर्थ्येऽनेकसद्भावे तदवश्यम्भावम्, एकाकिचन्द्रावधिकाधिक्यलाभस्येषत्करत्वं च, प्रपन्नत्वमुपेक्षानर्हताम्, अर्तित्वं झटित्युच्छेद्यताम्, क्विप्प्रत्ययस्तच्छेदे नखानां नित्योद्यमम्, स च भगवतो विपक्षोच्छेदोत्साहद्वारकं वीररसम्, नखानां छिदाकर्तृत्वमायुधान्तरापरिग्रहौचितीम्, तीक्ष्णतां च, सा तु रक्षादाक्ष्यम्, समस्तवाक्यार्थो भगवन्नृसिंहविषयककविनिष्ठरतिभावं च सूचयति। इत्थञ्च वस्त्वलङ्काररसादिलक्षणस्त्रिरूपोऽपि ध्वनिरिह स्फुटोऽवगन्तव्यः। **'प्रपन्नार्तिच्छिदः'** इतिविशेषणस्य साभिप्रायत्वेन परिकरोऽत्रालङ्कारः श्रुतिवृत्तिच्छेकानुप्रासैः संसृज्यते।

यत्त्वत्र 'पूर्वमेक एवासाधारणवैशद्यहृद्याकारयोगात् समस्तजनाभिलषणीयताभाजनमभवम्, अद्य पुनरेवंविधा नखा दश बालचन्द्राकाराः सन्तापार्तिच्छेदकुशलाश्चेति तानेव लोको बालेन्दुबहुमानेन पश्यति, न तु मामित्याकलयन् बालेन्दुरविरतमायासमनुभवतीत्युत्प्रेक्षाऽपन्हुतिध्वनिरपि' इति केचन व्याचक्षते। तत्र तदीयमहत्त्वमनुसन्दधतो वयं परमुदास्महे। तथाहि—प्रतीयमानाऽप्युत्प्रेक्षाऽपन्हुतिश्च तदैवात्र स्वीकर्तुं शक्येते, यदि प्रकृतधर्मिकाप्रकृतसम्भावनायाः, प्रकृतनिराकृतिपुर-

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-**
**स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।**
**केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ १ ॥**

**बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिरितिसंज्ञितः परम्परया यः**

स्सराप्रकृतस्थापनायाश्च तयोः सामग्र्याः कथञ्चिदिहोपलम्भः स्यात्। कष्टकल्पना तु न विच्छित्तिप्रसूरिति सहृदयैर्विभावनीयम् ॥ १ ॥

अथ कारिकात्मकं ध्वनिनिबन्धमारभमाणोऽनुबन्धान् दर्शयन् ध्वनिस्वरूपनिरूपणं प्रतिजानीते—**काव्यस्यात्मेति । ध्वनिरिति**—प्रसिद्धः। काव्यस्यात्मा यो बुधैः समाम्नातपूर्वः, तस्याभावमपरे जगदुः। अन्ये तं भाक्तमाहुः। केचित् तदीयं तत्त्वं वाचामविषये स्थितमूचुः। तेन सहृदयमनःप्रीतये तत्स्वरूपं ब्रूम इत्यन्वयः।

विप्रतिपत्तीर्वैशद्येन प्रकाशयितुं वृत्तिकारः कारिकां व्याचष्टे—**बुधैरिति**। काव्यस्य तत्त्वविद्भिर्मर्मज्ञैः (न तु तदनभिज्ञैः, तदुक्तेरिह स्वत एवानुपादेयत्वात्) बुधैः (न तु बुधेन, एकस्य भ्रान्तेरपि सम्भवात्) काव्यस्य सहृदयहृदयाह्लादिशब्दार्थमयस्य, आत्मा (तं विना काव्यत्वस्यैवास्वीकाराज्जीवनाधायकत्वेन) प्रधानम्, ध्वन्यते शब्दवाच्यार्थापेक्षयाऽधिकचमत्कारितया प्रतीयते योऽर्थः स ध्वनिरिति योगमर्यादया व्यङ्ग्यविशेषो ध्वनिरित्याख्याभाक्। परम्परयाऽविश्रान्तविबुधधारया यः सम्यगुचितं शासनानुसारं च, आम्नातः–आख्यातः (न तु सद्य एव येन केनचित् कल्पितः) तस्य ध्वनेः, सहृदयजनानां मनसि प्रकाशमानस्य तदनुभवगोचरस्य अपि अभावम्–असत्ताम्, अपरेऽयुक्ताभिधायित्वादनुपादेयनामानः, जगदुरित्यर्थः। 'इतिर्लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वकृत्' इत्यभियुक्तोक्तेरितिशब्देन यदि ध्वनिशब्दस्य योगः, तदा ध्वनिशब्दो विप्रतिपत्तिग्रस्ततया निश्चयविषयाभावादतात्त्विकमर्थं विहाय शब्दस्वरूपमात्रमभिदध्यात्। सहृदयानुभवगोचरतयाऽर्थात्मनो ध्वनेरिह तात्त्विकत्वेन तु तन्नोचितमिति भिन्नक्रममितिशब्दमत्रोररीकृत्य काव्यात्मेत्यनेनैव तस्यान्वयेऽङ्गीकृते, ध्वन्यर्थविवक्षाऽक्षता भवतीति दिक्। ध्वन्यभाववादस्य सम्भावनामात्रविषयतया पारमार्थिकासत्त्वेन परोक्षत्वस्य द्योतको 'जगदुः' इति लिट्

समाम्नातः तस्य सहृदयजनमनःप्रकाशमानस्याप्यभावं मन्ये जगदुः। तदभाववादिनां चामी विकल्पाः सम्भवन्ति।

तत्र केचिदाचक्षीरन्—शब्दार्थशरीरं तावत्काव्यम्। तत्र च शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव। अर्थगताश्चोपमादयः। वर्ण-

---

प्रायोजीति ध्येयम्॥

असम्भवतो वस्तुनः खण्डनमप्ययुक्तमिति ध्वन्यभाववादिपक्षत्रयस्य सम्भावनामुपदिशति—**तदभाववादिनामिति**। तच्छब्दः प्रक्रान्तं ध्वनिं परामृशति। **तस्य**—ध्वनेः, अभाववादिनाम्, अमी सम्प्रति निरूप्यमाणाः, विकल्पाः 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति पातञ्जलानुशिष्टा 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च' इति हर्युक्तेर्वैयाकरणाभिमतबौद्धपदार्थवच्छाब्दबोधविषया अपि 'आचक्षीरन्' 'ब्रूयुः' 'कथयेयुः' इतिलिङुपस्थापितसम्भावनामात्रजीवनतया वस्तुतोऽसन्तः पक्षाः सम्भवन्ति; न तु सन्त्येवेत्यर्थः।

तत्र प्रथमं पक्षमुपपादयति—**तत्र केचिदिति**। तत्र ध्वन्यभाववादिषु केचित् प्रथमे, इति—इत्थम्, आचक्षीरन्नित्यन्वयः। शब्दार्थौ—चमत्कारकः शब्दस्तदर्थश्च शरीरं यस्य तादृशं, तावन्निश्चितम्, काव्यम्। ( नत्वत्र कस्यापि विमतिरिति तावच्छब्दः सूचयति )। तस्य काव्यस्य ( अवयवे ) शब्दे—गताः—स्थिताः, चारुत्वस्य विच्छित्तिविशेषस्य, हेतवः, अनुप्रासादयः शब्दालङ्काराः प्रसिद्धा एव। ( न तु ध्वनिवदभिनवाः ) च पुनः, अर्थगताः—वाच्यनिष्ठाः, उपमादयोऽर्थालङ्काराः, चारुत्वहेतवः प्रसिद्धा एवेति शेषः। च तथा वर्णानां सार्थकानामनर्थकानां चाक्षराणाम्, सङ्घटनानां सन्दृब्धशब्दानां च ( माधुर्यादिव्यञ्जकतया ) धर्माः (व्यङ्ग्यव्यञ्जकभावेन ) वृत्तिमन्तः माधुर्यौजःप्रसादाः—'राजा भोजो गुणानाह विंशतिं चतुरश्च यान्। वामनो दश तान् वाग्मी, भट्टस्त्रीनेव भामहः' इतिसरस्वतीतीर्थदर्शितबाहुविध्या ये गुणाः ( चारुत्वहेतवः ) सन्ति, तेऽपि प्रतीयन्ते, सर्वैरितिशेषः। ( न तु ध्वनिवदप्रसिद्धा इति भावः ) ताभ्यः—सङ्घटनाभ्यः, अनतिरिक्ताऽभिन्ना, वृत्तिर्व्यापारो यासां ताः। यद्वा—'तदनतिरिक्ताः, इतिपाठे वृत्तिविशेषणत्वे च, तदेकरूपाः, उपनागरिका—पुरुषा—ग्राम्याख्यास्तिस्रो वृत्तयोऽपि ( चारुत्वहेतवः ) याः कैश्चिद् भट्टोद्भटप्रभृतिभिः प्रकाशिताः, ता अपि श्रवणगोचरं गताः श्रुताः। च पुनः, वैद-

संघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते । तदनतिरिक्तवृत्तयोवृत्तयोऽपि याः कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम् । रीतयश्च वैदर्भीप्रभृतयः । तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति ।

अन्ये ब्रूयुः—नास्त्येव ध्वनिः । प्रसिद्धप्रस्थानव्यतिरेकिणः काव्यप्रकारस्य काव्यत्वहानेः । सहृदयहृदयाह्लादिशब्दार्थमयत्वमेव काव्यलक्ष-

---

र्भीगौडीपाञ्चाल्यस्तिस्रो वामनोक्ताः, 'वैदर्भी गौड़ी पाञ्चाली लाव्य' इति चतस्रो विश्वनाथकथिताः, 'वैदर्भी चाथ पाञ्चाली, गौड़ी चावन्तिका तथा । लाटीया मागधी-चेति, षोढारीतिर्निगद्यते' इति भोजराजोपदिष्टाः षड्वा तत्स्थानीया रीतयोऽपि ( चारुत्वहेतवः) श्रुता एवेति शेषः । तेभ्योऽलङ्कारादिभ्यो व्यतिरिक्तो भिन्नः, अयं ( नूतनः ) केनाऽप्युच्यमानः, ध्वनिः, को नाम ? न कोऽपीत्यर्थः । 'तद्व्यतिरिक्तः' इत्यत्र तच्छब्देन गुणमात्रपरामर्शप्रकाशकः कस्यचन पक्षस्तु चिन्तनीयः, अलङ्कारवृत्तिरीतीनामसङ्ग्रहेण प्रक्रमविरोधापत्तेः । वृत्तिरीत्योर्गुणतादात्म्यस्य कथञ्चन स्थापनायामप्यलङ्कारासङ्ग्रहेण तद्दोषतादवस्थ्यात् । यदि नामायं ध्वनिर्वास्तविकोऽभविष्यत् , तदाऽवश्यं बुधैरलङ्कारादिवत् पर्यचेष्यत । अतः प्रसिद्ध्यभावान्नास्त्येव ध्वनिः । नहि प्रेक्षावन्तो व्यक्तिविशेषोक्तिश्रद्धाजाड्येनालीकं वस्तु मन्यन्त इति प्रथमस्य ध्वन्यभाववादस्य भावः ॥

अभाववादिनां द्वितीयं पक्षमुपन्यस्यति—**अन्ये ब्रूयुरिति ।** प्रसिद्धात् प्रतिष्ठन्ते परम्परया गच्छन्त्यनेनेति प्रस्थानं प्राचीनपद्धतिस्तस्मात् , व्यतिरेकिणो भिन्नस्य काव्यप्रकारस्य ध्वन्यात्मकाव्यभेदस्य काव्यत्वहानेः काव्यत्वाभावाद्ध्वनेरभाव इत्यर्थः । यदि ध्वनिः स्वीक्रियेत, तर्हि प्राचीनाचार्यैरननुशिष्टचरं काव्यत्वमप्यनायत्या तत्राङ्गीकरणीयं स्यात् । अनुपदवक्ष्यमाणहेतोर्नेष्टं तु तत् । तथासति 'छिन्ने मूले, नैव शाखा न पत्रम्' इति न्यायेन ध्वनिरेव नोररीक्रियतामित्येतत् प्रघट्टकस्य हृदयम् ॥

ननु सति लक्षणसमन्वये प्रयत्नशतेनापि तत्त्वं लक्ष्यादपनेतुमशक्यं भवतीत्याक्षेपमपक्षेप्तुं काव्यस्य लक्षणमुक्त्वा ध्वन्यात्मनि लक्ष्ये तस्य समन्वयमपि ब्रवीति—**सहृदयेति ।** 'चिन्मयं ब्रह्म' इत्यादौ सामानाधिकरण्यरक्षायै "तत्प्रकृतवचने मयट्" इति सूत्रे तदिति वाक्यभेदस्य नागेशेनोक्तत्वात्तद्योगेनेहापि स्वार्थिको मयट् । सह-

णम् । न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्सम्भवति । न च तत्समयान्तःपातिनः सहृदयान्कांश्चित्परिकल्प्य तत्प्रसिद्धया ध्वनौ काव्यव्यपदेशः प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते ।

पुनरपरे तस्याभावमन्यथा कथयेयुः—न संभवत्येव ध्वनिर्नामापूर्वः कश्चित् । कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावा-

---

दयहृदयाह्लादिनौ शब्दार्थावेव तन्मयं काव्यम् , तस्य भावस्तत्त्वं काव्यलक्षणं तद्वृत्तिस्तदितरव्यावर्तको धर्म्मः । उक्तप्रस्थानातिरेकिणो मार्गस्य प्रतिपादितालङ्कारगुणादिपरिष्कृतप्रकारभिन्नस्य भवदभिमतध्वन्यात्मकाव्यभेदस्य तत् काव्यलक्षणं यतो न सम्भवति नैव समन्वेति, सहृदयहृदयाह्लादकशब्दार्थाभावात् । तस्मात् काव्यत्वं तत्र नास्तीत्यर्थः । परिगणितेभ्यो गुणादिमत्प्रकारेभ्योऽन्यत्र सहृदयाह्लादकत्वं नानुभविकमिति न काव्यत्वं ध्वनावित्याकूतम् ॥

ननु ध्वनौ सहृदया ्लादजनकत्वाभाव एवासिद्धः, कियतांचित् सहृदयानां ध्वनेरप्याह्लादजननादित्यत आह—**नचेत्यादिना ।** तस्य ध्वनेः यः समयः सिद्धान्तः, तदन्तःपातिनस्तन्मध्यगामिनः—तत्स्वीकारिण इति यावत् , कांश्चिद् अयोग्यतयाऽज्ञातान् परिमितान् वा सहृदयान् परिकल्प्य वस्तुसद्वैदग्ध्यविरहेऽपि स्वपक्षपोषाय सचेतसः स्वीकृत्य भवद्भिः कथमपि प्रवर्तितयेति शेषः, तस्य ध्वनेः तेषां सहृदयानां वा प्रसिद्धया हेतुभूतया, ध्वनौ विलक्षणशब्दार्थयोः काव्यस्य व्यपदेशो-व्यवहारः, प्रवर्तितोऽपि ( भवद्भिर्बलात् ) प्रचारितोऽपि, सकलविदुषां मनोग्राहितां—हृदयङ्गमत्वं नावलम्बते—नाश्रयतीत्यर्थः । मुष्टिमेयैर्भवत्कल्पितसहृदयैः काव्यात्मतया स्वीकृतोऽपि ध्वनिः, सर्वविद्वदनुभवसिद्धो न भवतीत्यभिप्रायः । 'परिकल्पिततत्प्रसिद्धया' इति पाठे तु 'सहृदयान् इत्यत्र द्वितीया नोपपद्यते । इत्थं च—'भवद्भिः प्रवर्तितया' इत्यध्याहार आवश्यकः, 'परिकल्प्य' इति क्त्वाप्रत्ययोत्पत्त्यनुरोधात् । चमत्काराजनकत्वाद्ध्वनिर्नास्तीति द्वितीयाभाववादस्य सारम् ॥

ननु प्रथमेनाभाववादिना, ध्वनेः—प्रसिद्धेः, द्वितीयेन तस्य चारुत्वहेतुतायाश्च निरासे कृतेऽपि, क्वचिदेकत्रापि प्रसिद्धस्य तस्य सर्वथाऽपलापः कर्तुमशक्य एवेति शङ्कामपाकर्तुं तृतीयं पक्षमुपदिशति—**पुनरपर इत्यादिना ।** अन्यथाऽपूर्वत्वाभावरूपेण प्रकारान्तरेण । अपूर्वः पूर्वोक्तालङ्कारादिभ्यो विलक्षणः—कश्चिदनिश्चितरूपः

त्। तेषामन्यतमस्यैव वाऽपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं स्यात्।
किं च वाग्विकल्पानामानन्त्यात्संभवत्यपि वा कस्मिंश्चित्काव्य-लक्षणविधायिभिः प्रसिद्धैरदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति तदलीक-सहृदयत्वभावनामुकुलितलोचनैर्नृत्यते। तत्र हेतुं न विद्मः। सहस्रशो हि महात्मभिरन्यैरलंकारप्रकाराः प्रकाशिताः प्रकाश्यन्ते च। न च तेषामेषा

---

ध्वनिः नाम निश्चितम् न सम्भवति। कामनीयकं विच्छित्तिविशेषम्, अनतिवर्तमानस्यानतिक्रामतः, तस्य ध्वनेः, उक्तेष्वेवालङ्कारादिषु अन्तर्भावादित्यर्थः। अलङ्काराद्यपेक्षया चमत्कारविशेषाकरणात् ध्वनिस्तेष्वेवान्तर्भवति, नतु तेभ्यो विलक्षण इति ध्वनेरपूर्वत्वनिरसनमुखेन स्वरूपस्यापि निरसने तात्पर्यमिह पर्यवसातव्यम्॥

ननु ध्वनेस्तेष्वेवान्तर्भावे प्रसिद्धाया ध्वनिसञ्ज्ञायाः का गतिरित्यत आह—**तेषामन्यतमस्यैवेत्यादिना**। वा—अथवा, (ध्वनिसञ्ज्ञाप्रसिद्ध्यनुरोधेन) तेषामलङ्कारादीनाम्, अन्यतमस्य बहूनां मध्य एकस्य कस्यचन, एव नत्वस्य नवीनस्य, अपूर्वसमाख्यामात्रकरणे ध्वनिरिति नूतननाममात्रविधाने (कृते सति) यत्किञ्चनकथनम् अविशिष्टमुपादानं स्यादित्यर्थः। ध्वनिसञ्ज्ञां प्रति श्रद्धाजाड्ये तु, अलङ्कारादीनामेवैकस्य कस्यचन यथारुचि क्रियतां ध्वनिसञ्ज्ञा, नतु तावताऽपूर्वध्वनिसिद्धिरिति तात्पर्यम्। इह 'पूर्वसमाख्यामात्रप्रकरणे' इत्यपपाठस्तु लोचनपर्यालोचनविधुरैः कल्पितः।

ध्वनिमभ्युपगम्य निरस्यति—**किञ्चेत्यादिना**। किञ्च पुनः, प्रसिद्धैरुद्भटादिभिः काव्यलक्षणविधायिभिः, अदर्शितेऽनुपदिष्टे, कस्मिंश्चिदगण्ये ध्वनिलक्षणे, प्रकारलेशे—सूक्ष्मप्रभेदे, वक्तीति वागितिव्युत्पत्त्या वाचः शब्दस्य, उच्यत इति व्युत्पत्त्या वाचोऽर्थस्य च विकल्पानामतात्त्विकप्रकाराणाम्, आनन्त्यात्, सम्भवत्यपि—सम्भाविन्यपि, अलीकया—वितथया, सहृदयत्वस्य स्वधर्मिकवैदग्ध्यस्य, सम्भावनया, मुकुलितानि—कृतकसहृदयत्वप्रदर्शनाय कुड्मलवत् सङ्कोचितानि, लोचनानि यैः, तादृशैः, ध्वनिर्ध्वनिरिति ब्रुवाणैर्ध्वनिवादिभिः, यत्, नृत्यते, तत्र नृत्ये, हेतुं कारणविशेषं, न पश्यामः। हि यतः, अन्यैर्महात्मभिर्भामहदण्डिप्रमुखैः, सहस्रशोऽलङ्काराणां प्रकाराः पूर्वं प्रकाशिताः, साम्प्रतं चेदानीन्तनैः प्रकाश्यन्ते। तेषामलङ्कारप्रकाराणाम्, एषा दशा नितरामप्रसिद्धिः, न श्रूयते। तस्मादत्यप्रसिद्धत्वाद्धेतोः, ध्वनिः प्रवादमात्रं केवलमसारं वचनमेव। नत्वस्य ध्वनेः किञ्चिदपि,

दशा श्रूयते । तस्मात्प्रवादमात्रं ध्वनिः । न त्वस्य क्षोदक्षमं तत्त्वं किञ्चि-दपि प्रकाशयितुं शक्यम् ।

तथा चान्येन कृत एवात्र श्लोकः—

यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालंकृति,
व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत् ।
काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो,
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः ॥

---

क्षोदक्षमं चूर्णनयोग्यं सूक्ष्मविचारार्हमिति यावत् । तत्त्वं सारं, प्रकाशयितुं शक्य-मित्यर्थः । ध्वनिर्ध्वनिरितिद्विरुक्तिः सम्भ्रममादरंच सूचयति । आस्तां वाऽनन्ते जगति कुत्रचिदेकत्र ध्वनिचर्चा, नैतावता 'नैकमुदाहणं योगारम्भं प्रयुञ्जीत' इति शाब्दिकसिद्धान्तदृष्टान्तेन ध्वनेः सर्वानुभवगोचरत्वम् । तदभावे तु नाविसंवादिनी तस्यसिद्धिरित्यभिमतम् ॥

ध्वन्यभाववादं द्रढयितुमन्यसम्मतिं दर्शयति—**तथाचेत्यादिना । श्लोकः**-तथाच तदर्थप्रत्यायकश्च श्लोकः, अन्येनोदासीनेन ग्रन्थकर्तृसमसामयिकेन मनोरथ-(१)कविनेतिशेषः, कृत एवेत्यर्थः ॥

**यस्मिन्निति** । यस्मिन् काव्ये, सालङ्कृत्यलङ्कारसहितम्, अत एव मनसः प्रह्लादि–प्रमोदकम् ( अर्थालङ्कारवत्त्वात् ) किञ्चन–किमपि, वस्तुतत्त्वमर्थ इति यावत् नास्ति । च तथा व्युत्पन्नैश्शब्दालङ्कारशालिभिः वचनैश्शब्दैः करणैर्यत्, न रचितम् । च पुनः वक्रोक्त्या कुन्तलाङ्गीकृतकाव्यजीवितेन, यत्, शून्यम् । तत्काव्यं ध्वनिना प्रधानीभूतव्यङ्ग्यार्थेन, समन्वितम्, इत्येवं, प्रीत्या–गतानुगतिकत्वप्रसृत-प्रेम्णा, प्रशंसन्–स्तुवन्, जडोऽनुचितप्रशंसित्वेन मूर्खः, सुमतिनाऽयुक्तस्य ध्वनेरस्वी-कारात् सुधिया ध्वनेः स्वरूपं पृष्टः सन्, किम्, अभिदधाति कथयति, उत्तरयतीति यावत् । तत्, नो विद्मो न जानीम इत्यर्थः । किमपि ध्वनेस्तत्त्वमुक्तिपर्यवसायि नास्तीति तात्पर्यम् । एवञ्च ध्वनेरपूर्वत्वं न वर्तत इति 'एषामन्यतमस्यैव समाख्या ध्वनिरित्यतः' इत्यग्रिमोक्तिमनुसरतस्तृतीयस्य ध्वन्यभाववादस्य सारम् ॥

इत्थं ध्वन्यभाववादिमतत्रयं प्रदर्श्य, भाक्तत्ववादिपक्षप्रकाशनमुपक्षिपन् कारिका-

---

( १ ) कविरयं लोचनकर्तुरनुजान्मनोरथगुप्तादन्य एव कालभेदात् ।

'भाक्तमाहुस्तमन्ये'।

अन्ये तं ध्वनिसञ्ज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः।

यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथाऽपि अमुख्यवृत्त्या काव्येषु व्यवहारं

---

ऽवयवं विवृणोति—**भाक्तमाहुरित्यादिना**। भक्तिर्नाम—"अभिधेयेन सारूप्यात्सामीप्यात्समवायतः। वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता" ॥१॥ इत्यभियुक्तोक्तप्रकारोपचारविशेषात्मिका, सारूप्यादिना सम्बन्धेनाभिधेयसम्बन्धिनो ऽर्थान्तरस्य बोधिका, लक्षणाऽपरपर्य्यायाऽभिधामूलिका, 'भज्यते सेव्यते प्रसिद्धतयोद्घोष्यत इतिभक्तिरितियोगवती समारोपिता गौणी शक्तिः, तस्या आगतस्तज्ज्ञानप्रयोज्यारोपीयविषयताश्रयो भाक्तः, तं, ध्वनिसञ्ज्ञितं ध्वन्यत इति योगेन ध्वनिनामानं, काव्यात्मानं साररूपतया काव्यजीवनाधायकं व्यङ्ग्यम्। अन्ये-लक्षणापक्षपातिनो भट्टोद्भटादयः, आहुरित्यर्थः। कर्मणो निपातेनेतिनाऽभिधानात् गुणवृत्तिपदान्न द्वितीया। गुणैरुक्तसामीप्यादिभिः, साम्यप्रयोजकैस्तैक्ष्ण्यादिभिर्वा वृत्तिः शब्दस्य कल्पितशक्तिर्यत्रासौ गुणवृत्तिर्लक्ष्योऽर्थः। सामानाधिकरण्यनिर्देशानुरोधाद् व्यधिकरणबहुव्रीहिः। 'भक्त्या बिभर्त्ति नैकत्वं रूपभेदादयं ध्वनिः' इति ध्वनिभक्तितादात्म्यखण्डनस्याऽप्युपसंहरिष्यमाणतया गुणवृत्तिपदमिहोपचाररूपाप्रधानवृत्तिपरमप्यवगन्तव्यम्। तदाऽऽक्षेपसामञ्जस्यं तु ध्वनिशब्दस्य भावसाधनताऽङ्गीकारेण कथञ्चन विधेयम्। अर्वाचीनैस्सादृश्यसम्बन्धेनार्थान्तरस्य बोधिका गौणी, सादृश्यभिन्नसम्बन्धेनार्थान्तरस्य बोधिका च शुद्धा लक्षणाऽऽङ्गीक्रियते। एभिस्तु तयोः स्थाने क्रमेण भक्त्यपरपर्याया गुणवृत्तिस्तथा लक्षणा व्यवह्रियत इति लक्षणाशब्देनैतन्मते, नोभयोर्ग्रहणमिति बोध्यम्। व्यङ्ग्यस्यापि गुणवृत्त्यैव बोध इत्यलं व्यञ्जनयेति भाक्तत्वपक्षाभिप्रायः॥

ननु ध्वनेर्गुणवृत्तावन्तर्भावो गगनकुसुमप्राय एव, क्वाप्यनुपादानादित्यत आह—**यद्यपीत्यादिना**। ध्वनिशब्दस्य सङ्कीर्तनेन स्पष्टोपादानेन, गुणवृत्तिर्भक्तिः, अन्यो गुणालङ्कारादिर्वा कोऽपि प्रकारो यद्यपि काव्यलक्षणकारैर्भामहादिभिर्न प्रकाशितः, तथापि अमुख्यवृत्त्या भक्त्या, काव्येषु, व्यवहारं—वाक्यार्थबोधं, दर्शयता भट्टोद्भटवामनादिना, ध्वनेर्मार्गः—सिद्धान्तः, मनाक् स्पृष्ट ईषदुपात्तः, इतीदम्, परिकल्प्यानुसन्धाय, 'भाक्तमाहुस्तमन्ये' इत्येवमुक्तं कारिकाकृतेत्यर्थः। तथाहि—

दर्शयता ध्वनिमार्गो मनाक्स्पृष्ट इति परिकल्प्यैवमुक्तम्—'भाक्तमाहुस्तमन्ये' इति।

केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः। तेनैवंविधासु विमतिषु स्थितासु सहृ-

---

"शब्दाश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः। लोको युक्तिः कलाश्चेति मन्तव्याः काव्ययैर्ह्यमी" ॥ इति भामहोक्तिं विवृण्वता, 'शब्दानामभिधानमभिधाव्यापारो गुणवृत्तिश्च' इत्युद्भटेन, 'सा सादृश्याल्लक्षणा वक्रोक्तिः' इत्यभिदधानेन वामनेन च ध्वनिभक्त्योस्तादात्म्यमिव दर्शितम्। यद्यपि नामग्राहं ध्वनिः केनापि गुणवृत्तावन्यत्र वा नान्तर्भावितः, किन्तूद्भटादिभिर्लक्षणामूलध्वनिस्थलेऽपि गुणवृत्तिमात्रमुक्तमित्यनायत्या गुणवृत्तेस्तन्मते ध्वनिस्थानीयता कल्प्यते। वस्तुतस्तु तत्र गुणवृत्तिव्यञ्जनयोः सद्भावे क्वचिद्गुणवृत्त्युपादानं नेतरव्यावृत्तितात्पर्यकमिति तैरपि परिष्कृत एवायं पन्था इत्यवसेयम्। भाक्तत्वपक्षस्य बहुत्रोपलम्भात्सारगर्भप्रायत्वाच्च विद्यमानतां सूचयितुम् 'आहुः' इति लट्प्रयोगः ॥

"केचिदि'त्यादिना कारिकायामुक्तं ध्वनेरनिर्वचनीयतावादं दर्शयति—**केचित्पुनरित्यादिना**। लक्षणकरणेऽव्याप्त्यतिव्याप्त्यसम्भवपरिहारेण ध्वनेर्लक्षणविधाने, शालीनाऽप्रौढा, बुद्धिर्येषां ते कोमलमतयः पुनः केचित्, ध्वनेरुत्तमकाव्यस्य व्यङ्ग्यविशेषस्य वा, तत्त्वं व्यङ्ग्यं स्वरूपं वा, गिरामगोचरमनाख्येयं सहृदयहृदयेनैव संवेद्यं नत्वसहृदयबुद्धिगम्यं, समाख्यातवन्त ऊचिरे। इह ध्वनौ विप्रतिपन्नाः प्रथमे सतोऽपि तस्याभावं वदन्तो भ्रान्ताः, प्रधानस्यापि तस्य तत्त्वमपह्नुवाना मध्यमाः संशयानाः, अनपन्हुवाना अपि तस्य स्वरूपमेव लक्षयितुमजानाना अन्तिमा अज्ञानिन इत्युत्तरोत्तरं स्फुरति वैचित्र्यमेषाम्। उपसंहरति—**तेनैवमित्यादिना**। हेतौ तृतीया, निर्धारणे सप्तमी। यत एवंविधा–एतादृश्य इहोक्ता अनुक्ताश्च विमतयो विरुद्धबुद्धयो विरुद्धयुक्तिमदुक्तय इति यावत् स्थिताः, तेन हेतुना, तस्य ध्वनेः, स्वरूपं ब्रूमो निरूपयाम इत्यर्थः। ध्वनिस्वरूपानिरूपणे परैः पृष्टस्य सचेतसोऽपि कदाचिद् भ्रमः संशयो मौनं च सम्भवतीति तत्स्वरूपनिरूपणमावश्यकमित्याशयः। तेनेत्येकवचनेनैकैकविप्रतिपत्तिवाक्यार्थस्यापि निरूपणे हेतुत्वं सूच्यते ॥

तावताऽप्यपरितुष्यन् बुद्धिवैशद्याय शिष्याणामभिधेयप्रदर्शनाय च 'तेन ब्रूमः

दयमनःप्रीतये तत्स्वरूपं ब्रूमः । तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयमणीयसीभिश्चिरंतनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम् , अथ च रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते ।

**तत्र ध्वनेरेव लक्षयितुमारब्धस्य भूमिकां रचयितुमिदमुच्यते—**

सहृदयमनःप्रीतये तत्स्वरूपम्' इत्यमुमंशं कारिकायाः पुनर्व्याचष्टे—**तस्य हि ध्वनेरिति** । सकलानां सत्कवीनां काव्यस्योपनिषद्भूतमुपोर्ध्वं निषीदतीत्युपनिषदिति व्युत्पत्त्या सारत्वान्मूर्धन्यम्, 'उपनिषत्तु वेदान्ते रहस्यधर्मयोरपि' इति हैमोक्तेः रहस्यं वा अतिरमणीयं विच्छित्त्याधानाच्छब्दवाच्यलक्ष्यापेक्षया मनोरमतमम्, अणीयसीभिरतिसूक्ष्माभिः, चिरन्तनानां प्राचां, काव्यलक्षणविधायिनां बुद्धिभिः, गुणादिवद्, अनुन्मीलितपूर्वं प्रागप्रकाशितम् । अथ च तथा, रामायण—महाभारतप्रभृतिनि तदादिनि, लक्ष्ये उदाहरणे, सर्वत्र, प्रसिद्धो व्यवहारो यस्य तादृशं, न तु खपुष्पवदप्रसिद्धम्, तस्य विप्रतिपत्तिपिशाचीग्रस्यमानस्य ध्वनेः, स्वरूपं लक्षयतां लक्षणपुरस्सरं निरूपयतां पश्यतां वा, सहृदयानां, मनसि, आनन्दो रसास्वादात्मा प्रमोदः स्वपक्षस्थापनोद्भूताहोपुरुषिकाप्रयुक्तः प्रसादो वा, प्रतिष्ठां शाश्वतीं स्थितिं, लभतामितिहेतोः, प्रकाश्यते ध्वनिस्वरूपं निरूप्यत' इत्यर्थः । इह सकल—सत्कविशब्दाभ्यां ध्वनेः प्रसिद्धता, तया 'सम्भवत्यपि वा कस्मिंश्चित् इत्यादिनाऽऽपादितस्याप्रसिद्धत्वस्य मृषात्वम्, उपनिषद्भूतपदेन 'अपूर्वसमाख्यामात्रकरणे' इत्यादिनोपक्षिप्तस्यानपूर्वत्वस्य निरसनम्, अतिरमणीयत्वेन भाक्तत्वाभावः । 'अणीयसीभि' रित्यादिना गुणाद्यनन्तर्भूतत्वद्वारा नवीनत्वम्, तेनास्य ग्रन्थस्य प्राचीनग्रन्थैरगतार्थता । रामायणादिलक्ष्यप्रसिद्धव्यवहारतया 'तत्समयान्तःपातिनः' इत्यादिदर्शितदूषणनिराकरणम्, लक्षयतामित्यनेन तदनाख्येयत्वाभावः । आनन्दशब्देन निबन्धृनाम च प्रतीयते । समस्तेन ध्वनिस्वरूपमभिधेयम्, तज्ज्ञानेन सहृदयहृदयानन्दावाप्तिः प्रयोजनम्, तल्लिप्सुरधिकारी, साध्यसाधनभावः सम्बन्धश्च सूच्यते ॥

**तत्र ध्वनेरिति** । तत्रोक्तेऽनुबन्धचतुष्टये निर्णीते, ध्वनेरेव लक्षयितुमारब्धस्य लक्षणं कर्तुमुपक्रान्तस्य, निर्मातुमारब्धस्य प्रासादस्य भूमिमिव भूमिकामवतरणिकां, रचयितुं, ग्रन्थकृता, इदमधो निर्दिश्यमानमुच्यते, नत्वसम्बद्धं किमपीत्याशयः ।

**योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ २ ॥'**

काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ ।

**'तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।**

---

ध्वनिस्वरूपनिरूपणे प्रतिज्ञाते, वाच्यादिभेदकथनस्यासङ्गतिं निराकर्तुं, सामान्यभेदप्रदर्शनद्वारा ध्वनिं स्थापयितुं वा वृत्तिकारः कारिकामवतारयति—**योऽर्थः सहृदयेत्यादिना** । सहृदयैः श्लाघ्योऽतिप्रशंसनीयः, काव्यस्य शब्दार्थोभयमयस्य, देहस्य जीव इव, आत्मा प्रधानमिति, योऽर्थो व्यवस्थितो निश्चितः स्थेमानं वा प्राप्तः, तस्य वाच्योऽभिधेयः प्रतीयमानो व्यङ्ग्यश्चेतिख्यातौ, उभौ भेदौ स्मृतौ कथिताविर्त्यथः । तदेवाह वृत्तिकारः—**काव्यस्येत्यादिना** । ललितेन गुणालङ्कारादिसुन्दरेण, उचितेन रसव्यञ्जनानुकूलेन, सन्निवेशेन शब्दार्थविरचनेन चारुणो मनोरमस्य काव्यस्येत्यन्वयः । अवशिष्टं स्पष्टं विवृतमेव ।

इदमत्रावसेयम्—काव्येऽर्थप्रतीत्युपयोगिनः शब्दस्य वाच्यलक्ष्यार्थयोव न प्राधान्यम्, शरीररूपत्वात् । किन्तु सहृदयश्लाघोत्कर्षमात्रत्वेन परापेक्षया चमत्कारातिशयाधानाच्चात्मभूतः प्रतीयमानो योऽर्थः, स एव काव्यत्वव्यपदेशहेतुरनुप्राणकः प्रधानम् । इतरथा सर्वेषामपि वाक्यानां काव्यत्वमापद्येत । ननु यदि 'काव्यस्यात्मा ध्वनिः' इति प्रागुक्तम्, 'काव्यस्यात्मा स एवार्थः' इत्यग्रेऽपि प्रतीयमानस्यैवार्थस्य काव्यात्मत्वं वक्ष्यते, तर्हि कथमिदानीं काव्यात्मभूतार्थप्रभेदतया वाच्यार्थोऽप्युच्यत इति चेत् ; मैवम् । वाच्यार्थस्येहाविविक्तार्थसामान्यप्रकारताकथनेऽपि काव्यात्मत्वेनोपादानाभावात् । यदाहुर्लोचनकाराः—'स एक एवार्थो द्विशाखतया विवेकिभिर्विभागबुद्ध्याऽभियुज्यते । तथाहि—तुल्येऽर्थरूपत्वे किमिति कस्मैचित् सहृदयः श्लाघते, तद्भवितव्यं केनचिद्विशेषेण । यो विशेषः, स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसङ्कलनाविमोहितहृदयैस्तु तत्पृथग्भावो विप्रतिपद्यते, चार्वाकैरिवात्मपृथग्भावः । अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इतिविशेषणद्वारा हेतुमभिधायापोद्धारणदृशा तस्य द्वौ भेदावंशावित्युक्तम्, नतु द्वावप्यात्मानौ काव्यस्य' इति । न च ध्वनिनिरूपणप्रस्तावे वाच्यार्थनिरूपणम-

**बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः ॥ ३ ॥**

ततो नेह प्रतन्यते केवलमनूद्यते पुनर्यथोपयोगमिति ।

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥४॥**

प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषु महाकवीनाम् । यत्त-त्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योऽलंकृतेभ्यः प्रतीतेभ्यो वाऽवयवेभ्यो व्य-

---

सङ्गतमिति वाच्यम् । व्यङ्ग्यार्थबोधौपयिकत्वेन तन्निरूपणस्याऽप्यपेक्षितत्वात् । अत एवाग्रे वक्ष्यति 'तदुपायतया तद्वदर्थे वाच्ये तदादृतः' इति ॥

वाच्यार्थविशेषनिरूपणाभावकारणमाह—**तत्र वाच्यइत्यादिना** । तत्र द्वयोरर्थ-स्यांशयोर्मध्ये, यो वाच्योऽर्थः प्रसिद्धो; न तु विप्रतिपत्तिग्रासनिगूढः, सोऽन्यैरुद्भटा-दिभिः, काव्यलक्ष्मविधायिभिः काव्यलक्षणकारैः, बहुधा वाच्यालङ्कारादिविपुलप्रकारैः, व्याकृतो व्युत्पादित इत्यर्थः । यतोऽलङ्कारादिप्रकारनिरूपणप्रसङ्गेन प्राचीनैर्वाच्योऽर्थः सुविवृत एव, तस्मात् तत्पिष्टपेषणमिव मन्यमानैरस्माभिर्नैवात्र स विस्तरेण वर्ण्यते, किन्तु क्वचित्क्वचिदुपकाराय केवलमुद्देश्यतयोपादीयत इत्याशयः ॥

तदेवाह वृत्तिकृत्—**ततो नेत्यादिना** । तच्छब्देन कारिकाऽर्थो हेतुत्वेन परा-मृश्यते पुनश्शब्देन च व्यतिरेकः सूच्यते । अन्यद्व्याख्यातमेव । अर्थान्तरापेक्षया व्यङ्ग्यस्य वैलक्षण्यं निदर्शनेन द्रढ़यति—**प्रतीयमानमिति** । अङ्गनासु प्रशस्त-स्त्रीषु, प्रसिद्धेभ्यो ऽवयवेभ्यः करचरणादिभ्यो ऽतिरिक्तं भिन्नं, लावण्यम् "मुक्ताफ-लेषुच्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमितीरितम्" इतिशि-ङ्गभूपेन लक्षितं कान्तिपूरमिव, महाकवीनां वाणीषु कवितात्मकवाक्षु, प्रसिद्धेभ्यो ऽवयवेभ्यः शब्दार्थ—तदुभयालङ्कारादिभ्यो ऽतिरिक्तं, यत् त्रिशाखं प्रतीयमानं वस्तु विभाति, तदन्यदेवास्ति, न तु शब्दार्थादिरूपं विद्यत इत्यर्थः; तदेव विवृ-णोति वृत्तिकृत्—**प्रतीयमानमिति** । सहृदयहृदयेषु सुप्रसिद्धं शाश्वतिकप्रती-तिगोचरीभूतम् । प्रतीतेभ्यः प्रख्यातेभ्यः, पृथक्त्वं—लावण्यस्यावयवेभ्यो ज्ञेयम् , निर्वर्ण्यमानं दृश्यमानम् । लोचना तं सुधावन्नयवानन्दकम् । तत्त्वं वस्तु, पदार्थ इति यावत् । सोऽर्थोव्यङ्ग्योऽर्थः । अवशिष्टं व्याख्यातमेव ।

**तिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु । यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदयलोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः । स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकारा रसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते । सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम् । तथा ह्याद्यस्तावत्प्रभेदो वाच्याद्दूरं विभेदवान् । स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः ।**

**यथा—**

**'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण ।**

---

यत्तु व्यक्तिविवेककारः—'प्रतीयमानः पुनरन्य एव, सोऽर्थोऽस्ति वाणीषु महाकवीनाम्' इतीह प्रकरणानुरोधेन पाठभेदमकल्पयत् । तत्र विचार्यते—वस्तुत्वं यदि केवलान्वयि तर्हि प्रतीयमानेऽर्थे कथं न तिष्ठेत् । तत्सत्त्वस्वीकारे च काऽनुपपत्तिः इत्थं च वृथैव पाठविपर्यासकल्पनमिति विभावनीयम् । प्रतीयमानार्थस्य वाच्यात्पार्थक्यं प्रदर्श्य शाखात्रयमुद्दिशति—**सह्यर्थ इत्यादिना** । स व्यङ्ग्यो ऽर्थो हि अनेकैस्त्रिभिः । प्रभेदैः प्रकारैः भिन्नो विभक्तः अनुपदं दर्शयिष्यते । तथाहि—वाच्यस्य सामर्थ्येन व्यञ्जनाशक्त्या आक्षिप्तं प्रत्यायितं, वस्तुमात्रं केवलं वस्तु नत्वलङ्काररसादिरित्येकः प्रकारः । वाच्यसामर्थ्याक्षिप्ताअलङ्कारा द्वितीयः प्रकारः । तादृशा एव रसादयश्चेति तृतीयः प्रकारः । अनेकत्वमिह कपिञ्जलालम्भन्यायेन त्रित्वमात्रपर्यवसायि, प्रभेदप्रभेदापेक्षि वा ज्ञेयम् ॥ इत्थं व्यङ्ग्यस्य भेदानुद्दिश्य पुनर्वाच्याद्भेदं प्रतिजानीते—**सर्वेषु चेत्यादिना** । तेषु पूर्वोक्तेषु त्रिषु । तस्य—व्यङ्ग्यस्य । अन्यत्वं भेदः ॥

तत्रादौ वस्तुनो व्यङ्ग्यस्य ततो भेदं वदति—**तथाहीति** । आद्यो वस्तुरूपः । दूरमत्यन्तम् । तत्र हेतुमाह—**स हि कदाचिदिति** । हि यतो वाच्ये विधिरूपे, स व्यङ्ग्योऽर्थः प्रतिषेधरूपः कदाचिद् भवति, ततस्तस्माद्भिन्न एव । नहि विधिनिषेधात्मनोरर्थयोरैक्यं सम्भवति । भेदसिद्धौ च व्यङ्ग्यप्राधान्यनिबन्धना ध्वनिसिद्धिरित्याकूतम् । तमुदाहरति—**यथेति** । कुसुमान्यवचेतुं स्वसङ्केतस्थलीभूतगोदावरीतीरस्थकुञ्जं प्रति प्रयान्तं कमप्यभिसारविघ्नं रहस्यभेदं वाऽऽशङ्कमाना भीषयितुं काचन पुंश्चली व्याहरति—**भमधम्मि अइति** । "भ्रमधार्म्मिकः ! विश्वस्तः, स शुनकोऽद्य मारितस्तेन ॥ गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन' ॥ इतिच्छाया । हे

गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥"

क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपो यथा—

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए महण मज्जिहिसि ॥"

---

धार्म्मिक ! विश्वस्तः स्वैरं न तु पूर्ववत्सत्रासम् , भ्रम–कुसुमान्यवचेतुं सञ्चर । यतः स त्वत्त्रासहेतुः शुनकः श्वा, अद्य, तेन प्रसिद्धेन (केवलं त्वयैवाज्ञातेन) गोदानदीकच्छकुञ्जे गोदावरीसरित्तीरलतामण्डपे, वासिना सन्ततवासशीलेन, दृप्तो गर्वितः (ग्राममपि प्रविश्य हठाद्घातुकः) चासौ सिंहो दृप्तसिंहस्तेन मारित इत्यर्थः । जघनविपुलाच्छन्दः । अत्र त्रासहेतोः शुनो विनाशोपन्यासेन भ्रमणविधिर्वाच्यः । शुनोऽपि भीरोः सिंहोपलम्भोक्त्या सुतरां भ्रमणनिषेधस्तु वस्तुरूपः, सङ्केतरहस्यभङ्गभीरुपुंश्चलीवैशिष्ट्येन व्यङ्ग्य इतिवाच्यव्यङ्ग्ययोर्भेदः स्फुटः व्यङ्ग्यस्य चमत्कारितया च वस्तुध्वनिः । न च भ्रमेत्यस्य भ्रमणनिषेधे विपरीतलक्षणैवेति कुतो ध्वनेः सम्भव इति वाच्यम् । पदार्थोपस्थित्यनन्तरमेव बाधग्रहे जायमाने विपरीतलक्षणायाः प्रसरस्य प्रदीपकर्तृचरणैर्निर्धारणात् । इह तु वाच्यार्थबोधोत्तरं वक्त्र्यादिवैशिष्ट्यपर्यालोचनावसरे तद्ग्रह इति लक्षणायास्तदानीं भ्रष्टावसरतया व्यञ्जनयैव बोधः । तथाच—क्वचिद्वाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम् । पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु ॥' इत्यभियुक्तोक्तिसंवादेन व्यवस्थापितं दर्पणेऽपि । यदपि 'सद्मप्रान्ते श्वविनाशहेतुकेन भ्रमणविधिना, नदीकूले सिंहोपलम्भात्तन्निषेधो ऽनुमीयत इति महिम्ना ऽवलेपमहिम्ना प्रतिपादितम् । तच्चिन्तनीयम् , धार्म्मिकत्वेन स्पर्शदोषाच्छुनो भीरोरपि, वीरस्य, गुरुप्रभुनिदेश–प्रियानुराग–निधिलाभलोभादिपरवशस्य च सिंहाधिष्ठानस्थानेऽपि गमनदर्शनाद्धेतोर्व्यभिचरितत्वात् ॥ दार्ढ्याय पुनरन्यथोदाहरति—**क्वचिद्वाच्ये इति** । स्वगृहकृतवसतिं पथिकं प्रोषितपतिका पांसुला प्रतिपादयति—**अत्ता एत्थेति** । 'श्वश्रूरत्र निमज्जति, अत्राहं दिवसकं प्रलोकय । मा पथिक ! रात्र्यन्धक ! शय्यायामावयोर्माङ्क्षीः ॥' इतिच्छाया । हे रात्र्यन्धक तैमिरिक ! पथिक पान्थ ! अत्रास्मिन् स्थाने, श्वश्रूर्मत्पतिजननी निमज्जति जराऽऽधिक्येन निश्चेतनं शेते, अत्र तदितरस्थाने , अहं शये । ( तत् त्वं ) दिवसकं दिनं व्याप्य प्रलोकय सम्यक् पश्य । ( अन्यथा ) आवयोः श्वश्रूस्नुषयोः, शय्यायां, मा माङ्क्षीर्निस्सञ्ज्ञो मा पते-

**क्वचिद्वाच्ये विधिरूपेऽनुभयरूपो यथा—**

**'वच्च मह व्विअ एक्केइ होन्तु णीसासरोइअव्वाइं ।**
**मा तुज्झ वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥'**

---

त्यर्थः । गाथाच्छन्दश्च । इह शय्यायामापतनस्य निषेधो वाच्यः । निमज्जनेन सञ्ज्ञा-शून्यता, तया रहस्यभेदासम्भवः, तेन स्वैरविहारयोग्यता, तया च निवासावश्यम्भावौचिती, स्वस्य भिन्नस्थाने शयनेन विशेषविधेः शेषनिषेधपरत्वमितिन्यायेनाहमित्युक्तेस्तत्र स्वेतरजनाभावः, तेन प्राग्वत् , कुत्साऽर्थककप्रत्ययेन सम्भोगप्रतिबन्धिनि दिवसे ऽसूया, यद्वा ऽल्पार्थकेन तेन विलासौत्सुक्यम् , प्रलोकनाभ्यनुज्ञया तन्मुखेक्षणविनोदेन दिननिनीषा पथिकत्वेन कामुकत्वोपपत्तिः श्रान्तिश्च, ताभ्यां शय्याश्रयणसम्भवः, रात्र्यन्धकत्वेन निशि तल्पस्थे कदाचित् परेण दृष्टेऽपि तस्मिन् क्षत्यभावः, तल्पपतनसम्भवश्च, आवयोरित्यनेन केवलस्वसम्बन्धाभावः, तेन रहस्यगोपनम् , तावता, व्यभिचारिप्रतिपादकप्रतिपाद्यसम्बन्धेन च, मम शय्यायां निश्शङ्कं त्वया निशि शयनीयमिति कामुकपथिकविजिहीर्षाऽनुमानानन्तरमभ्यनुज्ञानरूपो विधिस्तु व्यङ्गय इति तयोरपि व्यक्तमेवान्यत्वम् ॥

पुनरन्यथोदाहरति—**क्वचिद्वाच्ये इति ।** अनुभयरूपो विधिनिषेधविलक्षणस्तटस्थस्वरूपः । सपत्नीसमासक्तं तदन्तिके जिगमिषन्तमपि स्वानुरोधेन विलम्बमानं कान्तं काचन ब्रूते—**वच्चमहेति ।** "व्रज ममैवैकस्या भवन्तु निश्श्वासरोदितव्यानि । मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ।" इतिच्छाया । हे कान्त ! व्रज प्रेयसीगृहं गच्छ । एकस्या एकाकिन्याः ममैव त्वद्वियोगेन निश्श्वासा रोदितव्यानि च भवन्तु । दाक्षिण्येनानेककान्ताविषयकाविषमानुरागेण, हतस्य नष्टस्य ( न तु प्रेमगुणोत्कर्षापकर्षविवेकिनः ) तवापि, तया प्रेप्सितप्रेयस्या, विना तद्विरहेण, निश्श्वासरोदितव्यानि, मा जनिषत माभूवन्नित्यर्थः । इह 'दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु' इति न्यायेन सर्वथा ऽनिष्टस्यापि प्रियगमनस्य विधिर्वाच्यः, त्वन्मनोनितरान्तस्यामासक्तमिति त्वदीयं शठत्वमवधारितं मया, अतो मदन्तिके स्थित्वा कृतं कृतकदाक्षिण्यप्रकटनेनेतिविधिनिषेधाभ्यामुदासीनमतदुभयात्मकं तर्जनं वस्तु तु व्यङ्गयमित्यतोऽपि तयोर्भेदः ।

पुनरन्यथोदाहरति—

**क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयरूपो यथा ।**

नायकः स्वापराधमवधाय सङ्केतस्थलान्निवर्तमानां दयितां निवर्तयंश्चाधुनाऽनुनयति—

**'दे आ पसिअ णिवत्तसु मुहससिजोह्लाविलुत्ततमणिवहे ! ।**
**अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे ! ॥'**

"प्रार्थये तावत् प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ! ॥" इतिच्छाया ।

हे मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ! वदनेन्दुचन्द्रिकानिरस्ततिमिरस्तोमे ! त्वामहं प्रार्थये, प्रसीद–प्रसन्ना भव, निवर्तस्व मा प्रयासीः । हे हताशे ! अन्यासामपि ( स्वस्य त्वर्थतः प्राप्तम् ) अभिसारिकाणां कान्तार्थं सङ्केतं गच्छन्तीनां, मार्गे मुखचन्द्रप्रकाशकरणाद् विघ्नं करोषीत्यर्थः । नायकस्य गृहमेवागच्छन्तीं प्रत्यप्रत्यभिज्ञानच्छलेन, तटस्थस्याभिसारिकासामान्यं प्रतिवेयमुक्तिरिति,' 'हताशे' इति सम्बुद्ध्यनौचितीं चाहुराचार्याः । अत्र प्रवृत्तिप्रतिषेधरूपं निवर्तनं वाच्यम् , विधिनिषेधाभ्यामुदासीनं दयितोपश्लोकनन्तु व्यङ्ग्यमिति भेदः सुवेदः ॥

पुनः प्रतिपाद्यभेदनिबन्धनं तयोर्भेदमुदाहरति—

**क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा ।**

वाच्ये यो विषयः प्रतिपाद्यो बोद्धव्य इति यावत्, तस्माद् विभिन्नो विषयो बोद्धव्यजनो यस्य तत्त्वेन व्यवस्थापितो वक्त्र्या नियमितः ।

अविनीतनायिकाया अधरे क्षतदर्शनेन नायकस्य तद्विषयकजारकर्तृकत्वसन्देहो मा भूदिति वाच्यकक्षायां ताम्प्रति, व्यङ्ग्यकक्षायान्तु तत्पतिं प्रति विदग्धसहचरी निगदति—

**'कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरम् ।**
**सभमरपउमग्घाइणि ! वारिअवामे ! अहसु एह्निम' ॥**

"कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥" इतिच्छाया ।

प्रियायाः स्वपत्न्याः सव्रणमनात्मकृतक्षतभाजम् , अधरं दृष्ट्वा, कस्य वा पुंसो रोषो न भ ति, ( अपि तु सर्वस्य भवत्येव ) भ्रमरेण सहितं सभ्रमरं यत्पद्मं तदाघ्रातुं

शीलमस्या इति तत्सम्बुद्धौ हे सभ्रमरपद्माघ्रायिणि ! तथा वारिता 'मा सभ्रमरं पद्मं घ्रासीः' इति मुहुर्निरुद्धाऽपि वामा विरुद्धाचरणात् प्रतिकूला या, तत्सम्बुद्धौ हे वारितवामे ! इदानीं पतिसंशयदशायां स्वानुचिताचरणोचितफलोपगमावसरे वा, सहस्व स्वदुरभिनिवेशसम्भवं पतिरोषजनियन्त्रणं मर्षयेत्यर्थः । इह मद्वारणमनादृत्य विहितस्याग्रहस्य फलं भुङ्क्ष्व, न मयाऽत्र किमपि प्रतिविधेय' मितितात्पर्यकस्य वाच्यस्य प्रतिपाद्या नायिका, मया वारिताऽपीयं मत्सखी, वामस्वभावतया सभ्रमरं पद्ममघ्रासीदिति भ्रमरेणास्या अधरो दष्टो, न तूपपतिनेतिव्यङ्ग्यस्य प्रतिपाद्यस्तु सन्निहितस्तत्पतिरिति विषयभेदादपि तयोर्भेदः स्ववधारः । अत्र सम्भविनामन्येषां क्रमशो भासमानानां प्रतिवेशि–सपत्नी– नायिका– तदुपपति–तटस्थादिविषयकाणां व्यङ्ग्यानां विस्तरभिया वर्णनं पृथङ् न कृतमितिलोचनेनालोचनीयम् ॥

'गतोऽस्तमर्कः' इत्यादौ वाच्यव्यङ्ग्ययोर्भेदकानां संख्यादीनामपि सङ्ग्रहार्थमाह—

**अन्ये चैवं प्रकारा वाच्याद्विभेदिनः प्रतीयमानभेदा संभवन्ति । तेषां दिङ्मात्रमेतत्प्रदर्शितम् ।**

विभेदिनो भिन्नाः । प्रतीयमानभेदा व्यङ्ग्यप्रकाराः । दिङ्मात्रं नत्ववधारणम् । तेन सङ्ख्यादिभेदभिन्नानामपि सङ्ग्रहः । तदुक्तं दर्पणे—

"बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतीतिकालानाम् ।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥" इति ॥

अलङ्कारात्मकव्यङ्ग्यद्वितीयभेदस्यापि वाच्याद्भेदमुपदिशति—

**द्वितीयोऽपि प्रभेदो वाच्याद्विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते ।**

द्वितीयोऽलङ्काररूपः । सप्रपञ्चम्–सविस्तरम् । अग्रे 'क्रमेणोद्द्योतितः परः' इत्यादिना द्वितीयोद्द्योते । वस्तुध्वनिवदलङ्कारध्वनिर्विधिनिषेध–तदुदासीनरूपत्वेनैव नानुगतः, किन्तु बहुशाख इतीह विस्तरेण न वर्णित इतिभावः ।

रसादिलक्षणं प्रधानतमं व्यङ्ग्यस्य तृतीयमपि भेदं वाच्याद्भिन्नं वदति—

**तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते । न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद्विभिन्न एव ।**

तृतीयो रस–भाव–तदाभास–तदुदय–शान्ति–सन्धि–शवलताध्वनिरूपो व्यङ्ग्यप्रकारः, वाच्यसामर्थ्याक्षिप्तोऽर्थनिष्ठव्यञ्जनाऽवगतः, प्रकाशते बोधविषयो भवति,

न तु साक्षाच्छब्दव्यापारस्याभिधाशक्तेः, विषयस्तत्प्रयोज्यशाब्दधीगोचरो भवति । तथा सति दोषान्तरैः सह स्वशब्दवाच्यत्वमप्यापद्येत ।

रसादीनां वाच्यत्वं खण्डयितुं विकल्पयति—

**तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा ।**

तस्य रसादेः, स्वशब्दैरसादिशब्दैश्शृङ्गारादिशब्दैर्वा, निवेदितत्वेनाभिधाद्वारा बोधनेन, विभावादिवाचकशब्दैरभिधाद्वारा विभावादेः, 'यत्परः शब्दः स शब्दार्थः' इति न्यायेन तात्पर्यशक्त्या च रसादेरपि बोधनेन वाच्यत्वं सम्भवति ।

तत्राद्यपक्षे दोषमाह—

**पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः ।**

रसादि-शृङ्गारादिशब्दैरेव रसादीनामास्वाद इति पूर्वः पक्षः, तदभ्युपगमे तु, रसादिशब्दाभाववति—

**भानुमिश्रस्य—**

"कर्णकलिपतरसालमञ्जरी-पिञ्जरीकृतकपोलमण्डलः ।
निष्पतन्नयनवारिधारया, राधया मधुरिपुर्निरीक्ष्यते ॥"

इत्यादौ रसप्रतीतिः, ।

**रूपगोस्वामिनः—**

"अवतंसितमञ्जुमञ्जरे, तरुणीनेत्रचकोरपञ्जरे ।
नवकुङ्कुमपुञ्जपिञ्जरे, मतिरास्तां मम गोपकुञ्जरे ॥"

इत्यादौ भावप्रतीतिश्च सर्वसम्मताऽपि भवितुं न शक्नुयात् । रसालशब्दस्य व्यूढ़स्यैव चूते रूढ़िरिति तद्घटकरसशब्दो निरर्थकः । तामेवानुपपत्तिमुपपादयति—

**न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम् ।**

सर्वत्र रसादिप्रत्यायके काव्ये तेषां रसादीनां च न तत्त्वम् । इत्थञ्च रसादिवाचकाभावेऽपि तत्र तत्र रसप्रतीतेर्जागरूकत्वाद्व्यक्तो व्यतिरेकाभावः ।

अथान्वयाभावमपि दर्शयति—

**यत्राप्यस्ति तत् तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः ।**

यत्रापि—

"मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती ।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥" इत्यादौ,

